# श्रीहनुमदष्टकं

हनुमदष्टकं अच्युतयतिकृतं

श्रीरघुराजपदाब्जनिकेतन पङ्कजलोचन मङ्गलराशे

चण्डमहाभुजदण्डसुरारिविखण्डनपण्डित पाहि दयालो ।

पातकिनं च समुद्धर मां महतां हि सतामपि मानमुदारं

त्वां भजतो मम देहि दयाघन हे हनुमन् स्वपदाम्बुजदास्यम् ॥ १॥

संसृतितापमहानलदग्धतनूरुहमर्मतनोरतिवेलं

पुत्रधनस्वजनात्मगृहादिषु सक्तमतेरतिकिल्बिषमूर्तेः ।

केनचिदप्यमलेन पुराकृतपुण्यसुपुञ्जलवेन विभो वै

त्वां भजतो मम देहि दयाघन हे हनुमन् स्वपदाम्बुजदास्यम् ॥ २॥

संसृतिकूपमनल्पमघोरनिदाघनिदानमजस्रमशेषं

प्राप्य सुदुःखसहस्रभुजङ्गविषैकसमाकुलसर्वतनोर्मे ।

घोरमहाकृपणापदमेव गतस्य हरे पतितस्य भवाब्धौ

त्वां भजतो मम देहि दयाघन हे हनुमन् स्वपदाम्बुजदास्यम् ॥ ३॥

संसृतिसिन्धुविशालकरालमहाबलकालझषग्रसनार्तं

व्यग्रसमग्रधियं कृपणं च महामदनक्रसुचक्रहृतासुम् ।

कालमहारसनोर्मिनिपीडितमुद्धर दीनमनन्यगतिं मां

त्वां भजतो मम देहि दयाघन हे हनुमन्स्वपदाम्बुजदास्यम् ॥ ४॥

संसृतिघोरमहागहने चरतो मणिरञ्जितपुण्यसुमूर्तेः

मन्मथभीकरघोरमहोग्रमृगप्रवरार्दितगात्रसुसन्धेः ।

मत्सरतापविशेषनिपीडितबाह्यमतेश्च कथञ्चिदमेयं

त्वां भजतो मम देहि दयाघन हे हनुमन्स्वपदाम्बुजदास्यम् ॥ ५॥

संसृतिवृक्षमनेकशताघनिदानमनन्तविकर्मसुशाखं
दुःखफलं करणादिपलाशमनङ्गसुपुष्पमचिन्त्यसुमूलम् ।
तं ह्यधिरुह्य हरे पतितं शरणागतमेव विमोचय मूढं
त्वां भजतो मम देहि दयाघन हे हनुमन्स्वपदाम्बुजदास्यम् ॥ ६ ॥

संसृतिपन्नगवक्त्रभयङ्करदंष्ट्रमहाविषदग्धशरीरं
प्राणविनिर्गमभीतिसमाकुलमन्दमनाथमतीव विषण्णम् ।
मोहमहाकुहरे पतितं दययोद्धर मामजितेन्द्रियकामं
त्वां भजतो मम देहि दयाघन हे हनुमन् स्वपदाम्बुजदास्यम् ॥ ७ ॥

इन्द्रियनामकचौरगणैर्हृततत्त्वविवेकमहाधनराशिं
संसृतिजालनिपातितमेव महाबलिभिश्च विखण्डितकायम् ।
त्वत्पदपद्ममनुत्तममाश्रितमाशु कपीश्वर पाहि कृपालो
त्वां भजतो मम देहि दयाघन हे हनुमन्स्वपदाम्बुजदास्यम् ॥ ८ ॥

ब्रह्ममरुद्गणरुद्रमहेन्द्रकिरीटसुकोटिलसत्पदपीठं
दाशरथिं जपति क्षितिमण्डल एष निधाय सदैव हृदब्जे ।
तस्य हनूमत एव शिवङ्करमष्टकमेतदनिष्टहरं वै
यः सततं हि पठेत्स नरो लभतेऽच्युतरामपदाब्जनिवासम् ॥ ९ ॥

इति अच्युतयतिकृतं हनुमदष्टकं सम्पूर्णम् ।